सीताष्टोत्तरशतनामस्तोत्रम्

॥ अथ श्रीमदानन्दरामायणान्तर्गत श्री
सीताष्टोत्तरशतनाम स्तोत्रम् ॥

अगस्तिरुवाच-
एवं सुतीष्ण सीतायाः कवचं ते मयेरितं ।
अतः परं श्रुणुष्वान्यत् सीतायाः स्तोत्र मुत्तमं ॥ १
यस्मिनष्टोत्तरशतं सीतानामानि सन्ति हि ।
अष्टोत्तरशतं सीता नाम्नां स्तोत्र मनुत्तमम् ॥ २
ये पठन्ति नरास्त्वत्र तेषां च सफलो भवः ।
ते धन्या मानवा लोके ते वैकुण्ठं व्रजन्ति हि ॥ ३

न्यासः।
अस्य श्री सीतानामाष्टोत्तर शतमन्त्रस्य-
अगस्त्य ऋषिः ।
अनुष्टुप् छन्दः ।
रमेति बीजं ।
मातुलिङ्गीति शक्तिः ।
पद्माक्षजेति कीलकं ।
अवनिजेत्यस्त्रं ।
जनकजेति कवचं ।
मूलकासुर मर्दिनीति परमो मन्त्रः ।
श्री सीतारामचन्द्र प्रीत्यर्थं सकल कामना सिद्ध्यर्थं
जपे विनियोगः ॥

करन्यासः ॥

ॐ सीतायै अङ्गुष्ठाभ्यां नमः ।
ॐ रमायै तर्जनीभ्यां नमः ।
ॐ मातुलिङ्ग्यै मध्यमाभ्यां नमः ।
ॐ पद्माक्षजायै अनामिकाभ्यां नमः ।
ॐ अवनिजायै कनिष्ठिकाभ्यां नमः ।
ॐ जनकजायै करतल करपृष्ठाभ्यां नमः ॥

अङ्गन्यासः ॥

ॐ सीतायै हृदयाय नमः ।

ॐ रमायै शिरसे स्वाहा ।
ॐ मातुलिङ्ग्यै शिखायै वषट् ।
ॐ पद्माक्षजायै नेत्रत्रयाय वौषट् ।
ॐ जनकात्मजायै अस्त्राय फट् ।
ॐ मूलकासुरमर्दिन्यै इति दिग्बन्धः ॥

अथ ध्यानम् ॥

वामाङ्गे रघुनायकस्य रुचिरे या संस्थिता शोभना
या विप्राधिप यान रम्य नयना या विप्रपालानना ।
विद्युत्पुञ्ज विराजमान वसना भक्तार्ति सङ्खण्डना
श्रीमद् राघव पादपद्मयुगळ न्यस्तेक्षणा सावतु ॥

श्री सीता जानकी देवी वैदेही राघवप्रिया ।
रमावनिसुता रामा राक्षसान्त प्रकारिणी ॥ १
रत्नगुप्ता मातुलिङ्गी मैथिली भक्ततोषदा ।
पद्माक्षजा कञ्जनेत्रा स्मितास्या नूपुरस्वना ॥ २
वैकुण्ठनिलया मा श्रीः मुक्तिदा कामपूरणी ।
नृपात्मजा हेमवर्णा मृदुलाङ्गी सुभाषिणी ॥ ३
कुशाम्बिका दिव्यदाच लवमाता मनोहरा ।
हनूमद् वन्दितपदा मुग्धा केयूर धारिणी ॥ ४
अशोकवन मध्यस्था रावणादिग मोहिनी ।
विमानसंस्थिता सुभ्रू सुकेशी रशनान्विता ॥ ५
रजोरूपा सत्वरूपा तामसी वह्निवसिनी ।
हेममृगासक्त चित्ता वाल्मीकाश्रम वासिनी ॥ ६
पतिव्रता महामाया पीतकौशेय वासिनी ।
मृगनेत्रा च बिम्बोष्ठी धनुर्विद्या विशारदा ॥ ७
सौम्यरूपा दशरथस्नुषा चामर वीजिता ।
सुमेधा दुहिता दिव्यरूपा त्रैलोक्यपालिनि ॥ ८
अन्नपूर्णा महालक्ष्मीः धीर्लज्जा च सरस्वती ।
शान्तिः पुष्टिः शमा गौरी प्रभायोध्या निवासिनी ॥ ९
वसन्तशीलता गौरी स्नान सन्तुष्ट मानसा ।
रमानाम भद्रसंस्था हेमकुम्भ पयोधरा ॥ १०
सुरार्चिता धृतिः कान्तिः स्मृतिर्मेधा विभावरी ।
लघूदरा वरारोहा हेमकङ्कण मण्डिता ॥ ११
द्विज पत्न्यर्पित निजभूषा राघव तोषिणी ।
श्रीराम सेवन रता रत्न ताटङ्क धारिणी ॥ १२
रामावामाङ्ग संस्था च रामचन्द्रैक रञ्जिनी ।

सरयूजल सङ्क्रीडा कारिणी राममोहिनी ॥ १३
सुवर्ण तुलिता पुण्या पुण्यकीर्तिः कलावती ।
कलकण्ठा कम्बुकण्ठा रम्भोरूर्गजगामिनी ॥ १४
रामार्पितमना रामवन्दिता रामवल्लभा ।
श्रीरामपद चिह्नाङ्गा राम रामेति भाषिणी ॥ १५
रामपर्यङ्क शयना रामाङ्घ्रि क्षालिणी वरा ।
कामधेन्वन्न सन्तुष्टा मातुलिङ्ग कराधृता ॥ १६
दिव्यचन्दन संस्था श्री मूलकासुर मर्दिनी ।
एवं अष्टोत्तरशतं सीतानाम्नां सुपुण्यदम् ॥ १७
ये पठन्ति नरा भूम्यां ते धन्याः स्वर्गगामिनः ।
अष्टोत्तरशतं नाम्नां सीतायाः स्तोत्रमुत्तमम् ॥ १८
जपनीयं प्रयत्नेन सर्वदा भक्ति पूर्वकं ।
सन्ति स्तोत्राण्यनेका नि पुण्यदानि महान्ति च ॥ १९
नानेन सदृशानीह तानि सर्वाणि भूसुर ।
स्तोत्राणामुत्तमं चेदं भुक्ति मुक्ति प्रदं नृणाम् ॥ २०
एवं सुतीष्ण ते प्रोक्तं अष्टोत्तर शतं शुभं ।
सीतानाम्नां पुण्यदंच श्रवणान् मङ्गळ प्रदम् ॥ २१
नरैः प्रातः समुत्थाय पठितव्यं प्रयत्नतः ।
सीता पूजन कालेपि सर्व वाञ्छितदायकम् ॥ २२

इति श्रीशतकोटि रामचरितांतर्गत
श्रीमदानन्दरामायणे वाल्मिकीये मनोहरकाण्डे
सीताष्टोत्तर शतनाम स्तोत्रं सम्पूर्णम् ॥